कृत्स्नं क्षेत्रं क्षेत्री प्रकाशयतीति, 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् । विनश्यत्स्वविनश्यन्तम्—इत्यादि शतश उक्तम् । तस्मान्न आत्मनः स्वतः वद्धमुक्तज्ञानाज्ञानकृतो विशेषः अस्ति, सर्वदा समैकरसस्वाभाव्याभ्युपगमात् । ये तु अतोन्यथा आत्मवस्तु परिकल्प्य वन्धमोक्षादिशास्त्रं च अर्थवादमापादय-न्ति, ते उत्सहन्ते—खेपि शाकुनं पदं द्र॒ष्टुम्, खं वा मुष्टिना आक्रष्टुम् चर्मवद्वेष्टितुम्, वयं तु तत् कर्तुमशक्ताः सर्वदा समैकरसम् अद्वैतम् अविक्रियं अजम् अजरम् अमरम् अमृतम् अभयम् आत्मतत्त्वं ब्रह्मैवस्मः इत्येष सर्ववेदान्तनिश्चितोर्थः इत्येवं प्रतिपद्यामहे । तस्मात् ब्रह्माप्येतीति उपचारमात्रमेतत्, विपरीतग्रहवद्देह संततेः विच्छेदमात्रम् विज्ञानफलमपेक्ष्य ॥

स्वप्नबुद्धान्तगमनदृष्टान्तस्य दार्ष्टान्तिकः संसारो वर्णितः संसारहेतुश्च विद्याकर्मपूर्वप्रज्ञा वर्णिता । यैश्च उपाधिभूतैःकार्य्य करणलक्षणभूतैः परिवेष्टितः संसारित्वमनुभवति, तानि चो-क्तानि । तेषां साक्षात् प्रयोजकौ धर्म्माधर्म्मौ इति पूर्वपक्षंकृत्वा, कामएवेत्यवधारितम् । यथा च ब्राह्मणेन अयं अर्थः अवधारितः, एवं मंत्रेणापीति वन्धं वन्धकारणं च उक्त्वा उपसंहृतं प्रकरण-म्—'इति नु कामयमानःइति' 'अथाकामयमानः' इत्यारभ्य सुषुप्त दृष्टान्तस्य दार्ष्टान्तिकभूतः सर्वात्मभावो मोक्ष उक्तः । मोक्षकारणं

च आत्मकामतया यत् आप्तकामत्वमुक्तम्, तच्च सामर्थ्यात् न आत्मज्ञानमन्तरेण आत्मकामतया आप्तकामत्वमिति—साम-र्थ्याद् ब्रह्मविद्यैव मोक्षकारणम् इत्युक्तम् । अतः यद्यपि कामो मूलमित्युक्तम्, तथापि मोक्षकारणविपर्ययेण बन्धकारणम् अविद्या इत्येतदपि उक्तमेव भवति । अत्रापिमोक्षः मोक्षसाधनं च ब्राह्मणे नोक्तम्, तस्यैव दृढीकरणाय मंत्रउदाह्रियते श्लोकशब्दवाच्यः॥

## सप्तमो मंत्रः

तदेष श्लोको भवति—यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतोभवत्यत्र ब्रह्म समश्नुत इति। तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदꣳ शरीरꣳ शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति ह्वोवाच जनको वैदेहः"

## भाष्यम्

तत् तस्मिन्नेवार्थे एषश्लोकः मन्त्रो भवति । यदा यस्मिन् काले सर्वे समस्ताः कामाः तृष्णाप्रभेदाः प्रमुच्यन्ते, आत्मकामस्य ब्रह्मविदः समूलतो विशीर्यन्ते, ये प्रसिद्धा लोके इहामुत्रार्थाः पुत्रवित्तलोकैषणालक्षणाः अस्य प्रसिद्धस्य पुरुषस्य हृदि बुद्धौ

श्रिताः आश्रिताः–अथ तदा, मर्त्यः मरणधर्मासन् कामवियोगा त्समूलतः, अमृतोभवति, अर्थात् अनात्मविषयाः कामाः अविद्यालक्षणाः मृत्यवः इत्येतदुक्तं भवति, अतः मृत्युवियोगे विद्वान् जीवन्नेव अमृतो भवति। अत्र अस्मिन् एव शरीरे वर्तमानः ब्रह्म समश्नुते, ब्रह्मभावं मोक्षं प्रतिपद्यते इत्यर्थः अतः मोक्षः न देशान्तरगमनादि अपेक्षते । तस्मात् विदुषो नोत्क्रामन्ति प्राणाः, यथावस्थिता एव स्वकारणे पुरुषे समवनीयन्ते, नाममात्रं हि अवशिष्यते–इत्युक्तम्। कथं पुनः समवनीतेषु प्राणेषु, देहे च स्वकारणे प्रलीने, विद्वान् मुक्तः अत्रैव सर्वात्मा सन् वर्तमानः पुनः पूर्ववत् देहित्वं संसारित्वलक्षणं न प्रतिपद्यते–इत्यत्रोच्यते–तत् तत्र अयं दृष्टान्तः, यथा लोके अहिः सर्पः, तस्य निर्ल्वयनी, निर्मोकः, सा अहि निर्ल्वयनी, वल्मीके सर्पाश्रये वल्मीकादावित्यर्थः, मृता प्रत्यस्ता प्रक्षिप्ता अनात्मभावेन सर्पेण परित्यक्ता, शयीत वर्तेत–एवमेव, यथा अयं दृष्टान्तः, इदं शरीरं सर्पस्थानीयेन मुक्तेन अनात्मभावेन परित्यक्तं मृतमिव शेते। अथ इतरः सर्पस्थानीयो मुक्तः सर्वात्मभूतः सर्पवत् तत्रैव वर्तमानोपि अशरीर एव, न पूर्ववत् पुनः सशरीरो भवति । कामकर्मप्रयुक्तशरीरात्मभावेन हि पूर्वं सशरीरः मर्त्यश्च, तद्वियोगात् अथेदानीम् अशरीरः अत

एव च अमृतः, प्राणः प्राणतीति प्राणः—'प्राणस्यप्राणम्, इतिहि वक्ष्यमाणे श्लोके, 'प्राणबन्धनं हि सोम्यमनः इति च श्रुत्यन्तरे, प्रकरणवाक्यसामर्थ्याच्च पर एव आत्मा अत्र प्राणशब्द वाच्यः. ब्रह्मैवपरमात्मैव। किंपुनस्तत् तेज एव विज्ञानम् ज्योतिः, येन आत्मज्योतिषा जगत् अवभास्यमानं प्रज्ञानेत्रं विज्ञानज्योतिःष्मत् सत् अविभ्रंशत् वर्तते। यःकामप्रश्नो विमोक्षार्थः याज्ञवल्क्येन वरोदत्तो जनकाय सहेतुकः बन्धमोक्षार्थलक्षणः दृष्टान्तदार्ष्टान्तिक भूत सएष निर्णीतः सविस्तरः जनकयाज्ञवल्क्याख्यायिकारूपधारिण्या, श्रुत्या संसारविमोक्षोपाय उक्तः प्राणिभ्यः इदानीं श्रुतिः स्वयमेवाह विद्यानिष्क्रयार्थं जनकेनैवमुक्तमिति, कथम्, सोहम् एवं विमोक्षितस्त्वया भगवते तुभ्यं विद्यानिष्क्रयार्थं सहस्रं ददामि—इति ह एवं किल उवाच उक्तवान् जनको वैदेहः, अत्र कस्माद्धि मोक्षपदार्थे निर्णीते, विदेहराज्यम आत्मानमेव च न निवेदयति एकदेशोक्त्या वित्त सहस्रमेव ददाति, तत्रकोऽभिप्रायइति—अत्रकेचिद्वर्णयन्ति अध्यात्मविद्यारसिको जनकः श्रुतमप्यर्थं पुनर्मन्त्रैः शुश्रूषति, अतो न सर्वमेव निवेदयति, श्रुत्वाभिप्रेतं याज्ञवल्क्यात् पुनरन्ते निवेदयिष्यामीति हि मन्यते, यदि चात्रैव सर्वं निवेदयामि, निवृत्ताभिलाषोऽयं श्रवणात् इति मत्वा, श्लोकान् न वक्ष्यति—इति च भयात् सहस्रदानं शुश्रूषालिङ्गज्ञापनायेति।

सर्वमप्येतत,असत् पुरुषस्येव प्रमाणभूतायाःश्रुतेः व्याजानुपपत्तेः । अर्थशेषोपपत्तेश्च–विमोक्षपदार्थे उक्तेपि ·आत्मज्ञानसाधने, आत्मज्ञानशेषभूतः सर्वैषणापरित्यागः संन्यासाख्यः वक्तव्योऽर्थ शेषः विद्यते, तस्मात श्लोकमात्रशुश्रूषा कल्पना अनृज्वी, अगतिका हि गतिः पुनरुक्तार्थकल्पना, साचअयुक्ता सत्यांगतौ । न च तत् स्तुतिमात्रमित्यवोचाम । ननु एवंसति, 'अत उर्ध्वं विमोक्षायैव, इतिवक्तव्यम्–नैषदोषः, आत्मज्ञानवत अप्रयोजकः संन्यासः पक्षे, प्रतिपत्तिकर्मवत–इति हि मन्यते, 'संन्यासेन तनुंत्यजेत् इतिस्मृतेः । साधनत्वपक्षेपि न, 'अत उर्ध्वं विमोक्षायैव इति प्रश्नमर्हति, मोक्षसाधनभूतात्मज्ञानपरिपाकार्थत्वात ।

## अष्टमो मन्त्रः ।

तदेते श्लोका भवन्ति अणुः पन्थाविततः पुराणोमा ॱ स्पृष्टोऽनुवित्तोमयैव तेनधीरा अपि यन्ति ब्रह्मविदः स्वर्गं लोकमित उर्ध्वं विमुक्ताः ॥ ८ ॥

## भाष्यम् ।

आत्मकामस्य ब्रह्मविदोमोक्ष इत्येतस्मिन्नर्थे मन्त्रब्राह्मणोक्ते, विस्तरप्रतिपादका एते श्लोका भवन्ति अणुः सूक्ष्मः पन्थाः

दुर्विज्ञेयत्वात्, विततः विस्तीर्णः, विस्पष्टतरणहेतुत्वाद्वा 'वितर' इति पाठान्तरात्, मोक्षसाधनो ज्ञानमार्गः पुराणः चिरंतनः नित्यश्रुतिप्रकाशितत्वात्, न तार्किकबुद्धिप्रभवकुदृष्टिमार्गवत् आर्वाक्कालिकः, मां स्पृष्टः मया लब्ध इत्यर्थः, योहि येन लभ्यते सतं स्पृशतीव संबध्यते, तेनायं ब्रह्मविद्यालक्षणो मोक्षमार्गः मयालब्धत्वात्, 'मां स्पृष्टः इत्युच्यते, न केवलं मयालब्धः किंतु अनुवित्तो मयैव, अनुवेदनं नाम विद्यायाः परिपाकापेक्षया फलावसानता निष्ठाप्राप्तिः भुजेरिव तृप्त्यवसानता, पूर्वं तु ज्ञान प्राप्ति सम्बन्धमात्रमेवेति बिशेषः । किम् असावेव मन्त्रदृक् एकःब्रह्मविधाफलं प्राप्तः नान्यः प्राप्तवान्, येन, 'अनुवित्तो मयैव, इत्यवधारयति—नैष दोषः अस्याःफलम् आत्मसाक्षिकमनुत्तम-मिति ब्रह्मविद्यायाः स्तुतिपरत्वात्, एवं हि कृतार्थात्माभिमान करम् आत्मप्रत्ययसाक्षिकम् आत्मज्ञानम्, किमतःपरम् अन्य-त्स्यात्—इति ब्रह्मविद्यां स्तौति, न तु पुनः अन्यो ब्रह्मवित् तत्फलं न प्राप्नोतीति, 'तद्यो योदेवानाम्, इति सर्वार्थश्रुतेः तदेवाह—तेन ब्रह्मविद्या मार्गेण धीराः प्रज्ञावन्तः अन्येपिब्रह्म विद इत्यर्थः, अपियान्ति अविगच्छन्ति, ब्रह्मविद्याफलं मोक्षं स्वर्गं लोकम्, स्वर्गलोकशब्दः त्रिविष्टपवाच्यपि सन् इह प्रकरणात् मोक्षाभिधायकः, इतः अस्माच्छरीरपातात् उर्ध्वं जीवन्त एव विमुक्ताः सन्तः ॥

इतिश्रीमत्सर्वतंत्रस्वतंत्रविद्यावाचस्पतिदेवराज पं० देवदत्तशर्मं विरचिते वेदान्तसिद्धान्तमतमार्तण्डे ईशकेनकठप्रश्नमुण्डक-माण्डूक्यऐतरेयतैत्तरीयछान्दोग्यवृहदारण्यादिदशोपनिषदां संक्षिप्तमंत्रसंग्रहस्संम्पूर्णः ।

अथ सर्वतंत्रस्वतंत्र विद्याबाचस्पाति देवराज पं० देवदत्त शर्मविरचिते

## वेदान्त सिद्धान्त मत मार्तण्डे दशोपनिषदां

संक्षिप्तार्थनिदर्शनेनोपक्रमोपसंहारावनुज्झितभाष्यावुपवर्ण्यैते ।

# अथ ईशोपनिषदि

" ईशावास्यमिदम् "

अत्राद्येन मन्त्रेण सर्वैषणापरित्यागेन ज्ञाननिष्ठोक्ता इति प्रथमो वेदार्थः । ईशावास्यमिद ँ सर्वमागृधः कस्य स्विद्धनम्। पुनरज्ञानां जिजीविषूणां ज्ञाननिष्ठा संम्भवे कुर्वन्नेवेह कर्माणि जिजीविषेदिति कर्मनिष्ठोक्ता द्धितीयो वेदार्थः ॥

अनयोश्चनिष्ठयोर्मन्त्रदर्शितयोर्विभागः पुनरन्यत्रापि बृहदारण्यकादौ प्रदर्शित एव सोऽकामयत इत्यादिना कर्मनिष्ठोक्ता ज्ञाननिष्ठा च किं प्रजया करिष्यामो येषां नोयमात्मायं लोक इत्यादिना—

एतेन इषावास्येत्यादिसपर्यगादित्यन्तेन मंत्रव्यूहेन तथा

असुर्यानामित्यनेनाविद्वन्निन्दाप्रदर्शनेन विद्वद्विषयकेन ज्ञान निष्ठैव प्रदर्शिता । अन्ये च ये मंत्राः कुर्वन्नेवेह कर्माणीत्यादयः अज्ञानिनांकामिनां जिजीविषूणां कर्मनिष्ठामेवाववोधयन्तिस्म।

एतावता ईशावास्योपनिषन्मंत्राणा संक्षिप्तसारार्थः । अवगन्तव्यः । तथाहि ईशा परमेश्वरेण जगत्यां यत्किञ्चित्त्व सर्वं वास्यं तेन हेतुना त्यक्तेन त्यागेन आत्मानं भुञ्जीथाः पालयेथाः स्विदितिप्रश्ने यद्वा अनर्थकोऽव्ययः । कस्यापि धनं नास्ति धनस्यापीश्वररूपत्वात्अतः धनं मागृधिः गृधिमाकांक्षां धनविषयिकां माकार्षीः एतेन मंत्रेण ज्ञाननिष्ठाप्रदर्शिता कुर्वन्नेवेह कर्माणीत्यनेन कर्मनिष्ठाच प्रदर्शिता—तथाहि कर्माणि-कुर्वन्नेव शतंसमाः जीवितुमिच्छेत्—एवं त्वयि नरेनरदेहाभिमानिनि कामिनि अशुभं कर्म न लिप्यते—इतः अस्मात् प्रकारात् अन्यथा प्रकारान्तरं नास्ति येनाशुभं पापन्नस्पृशेत त्वामिति ॥

प्रथम वेदार्थ से यह अर्थ निर्गलित हुआ कि परमेश्वर अतिरिक्त जगत नहीं तद्रूप जगत होने से किसी के धन की आकांक्षा न करते हुए वैराग्य में अपने को रक्षा करो इससे ज्ञान निष्ठा दिखलाया— २ कुर्वन्नेवेह इस मंत्र से यावत जीव अग्नि होत्रादि कर्म करने से कामनावाले को पाप नहीं स्पर्श करता है इससे अन्य उपाय नहीं है कामनावाले जीवों के

उद्धार होने का जिससे पंच शूनादिदोष स्पर्श न करे कर्म निष्ठावाले को इति–

अथ केनोपनिषदि " केनेषितं पतति प्रेषितं मनः ॥ १ ॥

केनेषितमित्याद्युपनिषत्परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्यारम्भः । प्रागेतस्मात्कर्माण्यशेषतः परिसमापितानि समस्तकर्माश्रयभूतस्य च प्राणस्योपासनान्युक्तानि कर्माङ्गसामविषयाणि च अनन्तरं च गायत्रसामविषयं दर्शनं वंशान्तमुक्तं कार्यं सर्वमेतद्यथोक्तं कर्म च ज्ञानं च सम्यगनुष्ठितं निष्कामस्य मुमुक्षोः सत्वशुद्ध्यर्थं भवति । सकामस्य तु ज्ञानरहितस्य केवलानि श्रौतानि स्मार्तानि च कर्माणि दक्षिणमार्गप्रतिपत्तये पुनरावृत्तये च भवन्ति । एतेन स्वाभाविक्या प्रवृत्त्या हि शास्त्रविहीनानां पश्वादिवत्प्रवृत्त्या अधोगतिः स्यात् । अथैतयोर्पथोर्मध्ये कतरेणापि भाव्यम ज्ञानिनां तु केवलेन ज्ञानेनैव मोक्षः कर्मिणां तु कर्मणा लोकप्राप्तिः तृतीयस्तु जायस्व म्रियस्वेतिपन्थाः क्षुद्राणां जन्तूनां 'जायस्व म्रियस्वेति' मंत्रवर्णनात् अतएव संस्कारविशेषोद्भवाद्विरक्तस्य प्रत्यगात्मविषयैव जिज्ञासा केनोपनिषत्सम्मता इतिदिक् ॥

शिष्यगुरु परम्परा

केनोपनिषद् में पूर्व में संपूर्ण कर्म कह आये अब इस बखत

ब्रह्मविद्या कहने के लिये समस्तकर्माश्रयभूत प्राणोपासना भी कह चुके कर्म के अङ्गभूत सामवेद विषयक गायत्री उपासना विषयक ज्ञान कह कर वंशान्त कर्मकाण्ड प्रतिपादन किया यह सर्व कार्य करने वाले को निष्कामं जो मुमुक्षु उसको सत्व शुद्धि होती है सकाम वाले को श्रौत स्मार्त कर्म करने से दक्षिणमार्ग में प्रवृत्त होता है और पुनरावृत्ति के वास्ते होता है इस से श्रुति स्मृति विहीन गति वाले को पश्वादि की तरह अधोगति होता है कर्ममार्ग और ज्ञानमार्ग यह दो रास्ता हैं इन दोनों रास्ते से जो नहीं चलने वाले हैं उनको तृतीयमार्ग यह होता है शीघ्र २ जन्ममरण जैसे मशकपतंगादि जैसा श्रुति ने कहा है " जायस्व म्रियस्व " यानी जन्मो और मरो इस वास्ते संस्कार विशेष वाले जो मनुष्य हैं उनको ब्रह्मविद्या में प्रवृत्ति करने के लिये केनोपनिषत् का निर्गलितार्थ है ॥

## अथ कठोपनिषदि

सदेर्धातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्य क्विप्प्रत्यान्तस्य रूपमिदम् 'उपनिषत्' इति । उपनिषच्छब्देन च व्याचिख्यासित ग्रन्थ प्रतिपाद्यवेद्यवस्तुविषया विद्या उच्यते । केन पुनरर्थयोगेनोपनिषच्छब्देन विद्योच्यत इति उच्यते । ये मुमुक्षवो दृष्टानुश्रविक विषयवितृष्णाः सन्तः उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां

विद्यामुपसद्योगम्य तन्निष्ठतया निश्चयेन शीलयन्ति, तेषाम विद्यादेः संसारबीजस्य विशरणाद्धिंसनाद्विनाशनादित्यनेनार्थ योगेन विद्योपनिषदित्युच्यते ॥

उप नि पूर्वक क्विबन्त षद्लृ धातुसे 'उपनिषत' बनता है उपनिषद् सब्द से व्याख्यान करने लायक जो ग्रंथ विशेष हैं उससे कहा हुआ जानने का विषय विद्या है इसी विद्याको जानने के लिये मुमुक्षुलोग कठोपनिषद का अर्थानुसन्धानकरें इसवास्ते नाचिकेत और यमके संवाद से कठोपनिषद् ब्रह्म विद्या प्रवृत्ति भई है इसका प्रत्येक मंत्रों का अर्थ अत्यन्त सुलभ है तथापि कुछ मंत्रों का सुगमरीति से भाष्यानुसार हम लिखते है ॥

"अन्यच्छ्रेयोऽन्यदुतैवप्रेयः" । १ ।

दो मार्ग हैं एक श्रेय दूसरा प्रेय श्रेय मोक्ष को कहते हैं प्रेय स्वर्गादि को कहते हैं जो मोक्षमार्ग ग्रहण करता है उसको ठीक होता है और जो स्वर्गादि की इच्छा करता है वह वारम्वार आता जाता है वेदान्त का तात्पर्य यह है यह दोनों मार्ग सकाम और निष्काम इनका आपस में परस्पर कोई सम्बन्ध नहीं इस लिये श्रुति में नानार्थं कहा है ॥

"श्रेयश्च प्रेयश्च" ।२।

इस कारण विद्वान् समझकर ग्रहण करें जो मोक्षमार्ग को ग्रहण करता है वह विद्वान् कहाता है और जो स्वर्गादि को चाहता है वह मूर्ख कहाता है ॥

"सत्वं प्रियान् प्रियरूपान् इति" । ३ ।

सो तुमने हे नाचिकेत समझकर कामनाओं का परित्याग किया जिसमें बड़े बड़े मनुष्य भूले ।

"दूरमेते विपरीते विषूची" । ४

अविद्या और विद्या यह दोनों बहुत दूर है आपस में एक दूसरे को विरोधी है अविद्या वाले को बहुत कष्ट है इसलिये अविद्या परित्याग करके विद्या की इच्छा करने वाले जो नाचिकेत है सो तुमको बहुत कामना में हमने फंसाया पर तुम लोभ को प्राप्त नहीं हुऐ ।

"अविद्यायामन्तरे वर्तमानाः । ५

अविद्या में पड़ा हुआ अपने को पण्डित मानता हुआ जो तकलीफ उठाता हुआ जन्म मरण दुःख को प्राप्त होता है

वह मूर्ख है ऐसा उपदेष्टा अपने जन्मादि दुःख को भोगते दूसरे को भी भुगवाता है. जैसे आंधा मनुष्य करके आंधरा पहुंचा जाय यानी स्वयं अन्धा पुरुष दूसरे अन्धे को किस प्रकार पहुंचा सक्ता है।

"न सांपरायः प्रतिभाति वालमिति । ६.

कामनाओं से वंधे अज्ञानी मनुष्य को मोक्षमार्ग अच्छा नहीं लगता है ऐसे नास्तिक बारम्बार मेरे वशमें आते हैं।

" श्रवणायापि बहुभिर्योन लभ्य इति ॥ ७ ॥

बहुत कर्णों से जो नहीं प्राप्त होसक्ता है और सुनने वाले भी बहुत जिसको नहीं जानसके इस ब्रह्मविद्या को कहने वाला पंडित आश्चर्य है जो लाभ हो उस पंडित से जो जानने वाला है यह भी आश्चर्य है अर्थात् न कोई कहने वाला है न जानने वाला है।

" न नरेणावरेण प्रोक्त एष इति ॥ ८ ॥

अनभिज्ञ का कहा हुआ यह ब्रह्मविद्या विचार करने से भी फल नहीं देता नहीं कहने विना ब्रह्म विद्या चरितार्थ

नहीं हो सक्ती है इस वास्ते इसका विचार बहुत सूक्ष्म है इस में तर्कना करने लायक नहीं ।

" नैषा तर्केण मतिरापनेया ॥ ९ ॥

ब्रह्मविद्या विषयक जो बुद्धि सो तर्क से नहीं हटानी चाहिये यह ब्रह्मविद्या गुरु शिक्षा विना फलवाली नहीं होती जिस बुद्धि को तुम पाचुके हो हे नाचिकेत तुह्मारे समान पूंछने वाला नहीं मिला ।

"जानाम्यहं शेवधिरित्यनित्यमिति ॥ १० ॥

मैं मोक्षमार्ग जानता हूं· ब्रह्म से भिन्न सब अनित्य हैं अनित्य से नित्य लाभ नहीं होता है तथापि अग्न्याधान यानी अग्नि होत्र निष्काम होकर हम करते हैं निष्काम वाले को अनित्य कर्म सत्व शुद्ध द्वारा मोक्ष देता है ॥

"कामस्याप्तिं जगतः प्रतिष्ठामिति ॥ ११ ॥

एतेन उक्तप्रकारेण कस्तं मदामदं देवं इत्याद्यन्तेन धर्मराजवाक्येन उपनिषद्मंत्रव्यूहेन एप एवार्थः निर्गलितो भवति न कर्मणा न ज्ञानकर्मणा कैवल्यं किंतु निष्कामकर्मणा सत्वशुद्धिः सत्वशुद्धौ ज्ञानशुद्धिः इति केवलेनैव ज्ञानेन कैवल्यम् ॥

इस कठोपनिषद में कहे हुए मंत्रों से स्पष्ट प्रतीत होता है कि केवल कैवल्य निःश्रेयस कर है ज्ञान से संसार प्रतीति होता है किन्तु यह जीव संसार समष्टि व्यष्टि जो दीखता है वह "नजायते म्रियते वा कदाचित्" इस मंत्र से यह जाना जाता है जीव न हुआ न मरेगा इस वास्ते अज है याने जन्म लेकर फिर मरने वाला कभी नहीं हुआ न है न होगा इसी मंत्र को भगवद्गीता में भी लिखा है इस वास्ते हमने कठोपनिषत् के उपसंहारार्थ संग्रह किया इससे यह सिद्ध हुआ कि जीव ही ब्रह्म है अज्ञान से संसार प्रतीत होता है ज्ञान होने पर स्वस्वरूप जो ब्रह्म सो वही हो जाता है ॥

प्रश्नोपनिषदि षष्ठप्रश्ने मंत्रः

"अरा इव रथ नाभौ ॥

यथा रथनाभौ वक्रदारुणि प्रतिष्ठितानि भवन्ति तथैव यस्मिन् ब्रह्माणि सर्वे कलाः प्रतिष्ठिताः तं पुरुषं यस्त्वं वेद तं त्वां मृत्युर्जन्ममरणं मा परिव्यथाः अतः वः युष्मान् मा पराभूत एतेन प्रश्नोपमिषन्मंत्रेणापि ब्रह्मविदेव ब्रह्मेति सुनिश्चितम् ॥

जैसे रथ के नाभिचक्र में टेढ़े काष्ठ प्रतिष्ठित होते हैं वैसे ही ब्रह्म में सब कला प्रतिष्ठित हैं ऐसे ब्रह्म के जाननेवाले

जो हैं उनको मृत्यु वाधा नहीं करता है सर्वज्ञकल्प जो आचार्य यानी सब विषय के जानने वाले जो आचार्य उनसे ब्रह्मविद्या पढ़नी चाहिये पढ़ करके जो एसा अपने को निदिध्यासन करेगा उसको मृत्युवाधा नहीं करेगा वह ब्रह्म वेत्ता ब्रह्म ही होता है यह प्रश्नोपनिषद् के मन्त्र से ज्ञात होता है ॥

मुण्डकोपनिषदि प्रथम मुण्डके मंत्रः
"अविद्यायामन्तरे वर्तमानाः" ॥८॥

'ब्रह्मा देवानाम्' इत्याद्याथर्वणोपनिषत् । अस्याश्च विद्या संप्रदायकर्तृपारम्पर्यलक्षणं संवन्धमादावेवाह स्वयमेवस्तुत्यर्थम् एवं हि महाद्भिः परमपुरुषार्थसाधनत्वेन गुरुणायासेन लब्धा विद्येति । श्रोतृबुद्धिप्ररोचनाय विद्यां महीकरोति स्तुत्या प्ररोचितायां हि विद्यायां सादराः प्रवर्तेरन्निति । प्रयोजनेन तु विद्यायाः साध्यसाधनलक्षणं संवन्धमुत्तरत्र वक्ष्यति "भिद्यते हृदयग्रन्थि" इत्यादिना । अत्र चापरशब्दवाच्याया ऋग्वेदादि लक्षणाया विधिप्रतिषेधमात्रपराया विद्यायाः संसारकारणा विद्यादिदोषनिवर्तकत्वं नास्तीति स्वयमेवोक्त्वा परापरेति विद्या भेदकरणपूर्वकं 'अविद्यायामन्तरे वर्तमानाः' इत्यादिना, तथा परप्राप्तिसाधनं सर्वसाधनसाध्यविषयवैराग्यपूर्वकं गुरुप्रसादलभ्यां ब्रह्मविद्यामाह 'परीक्ष्य लोकान्' इत्यादिना । प्रयोजनं चासक्त

द्ब्रवीति 'ब्रह्मवेद ब्रह्मैव भवति' इति 'परामृताः परिमुच्यन्ति सर्वे, इतिच। ज्ञानमात्रे यद्यपि सर्वाश्रमिणामधिकारः, तथापि सन्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधनं न कर्मसहितेति 'भैक्षचर्यां चरन्तः' 'सन्यासयोगात्' इतिच ब्रुवन् दर्शयति। विद्याकर्म विरोधाच्च। नहि ब्रह्मात्मैकत्वदर्शनेन सहकर्म स्वप्नेपि संपादयितुं शक्यम्, विद्यायाः कालविशेषाभावादनियतनिमित्तत्वाच्च काल संकोचानुपपत्तेः यत्तु गृहस्थेषु ब्रह्मविद्यासंप्रदायकर्तृत्वादिलिङ्गं न तत्स्थितंन्यायं वाधितुमुत्सहते नहि विधिशतेनापि तमः प्रकाशयोरेकत्र सद्भावः शंक्यते कर्तुम्,किमुतलिङ्गैः केवलैरिति। एवमुक्तसंवन्धप्रयोजनाया उपनिषदोऽल्पग्रन्थविवरणमारभ्यते। य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरः सराः सन्तः तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्मगमय त्यविद्यादि संसारकारणं वा अत्यन्तमवसादयति विनाशयतीत्युनिषत्, उपनि पूर्वस्य सदेरेवार्थस्मरणात् अविद्यायामन्तरे वर्तमाना इत्यारभ्य तदेतत्सत्यमृषिरङ्गिरा श्चैतदन्तेन मुण्डकोपनिषन्मंत्रव्यूहेन संसारावस्थायां द्वैतमिवापि सर्वं खल्विदं ब्रह्मेतिवत् अद्वैतं प्रतिपादयिता द्वासुपर्णावित्यादि ष्वपि वास्तवमद्वैतमेव उपाधौ विनिवृत्ते भवति इति प्रतिपादितम्॥

विषय प्रयोजन अधिकारी संवन्ध दिखलाते हुए ब्रह्म

से ब्रह्मविद्या को आविर्भाव बतलाते हुए अंगिरा प्रभृति महर्षियों द्वारा शिष्ट गुरु से ब्रह्मविद्या पढ़ने वाले को ब्रह्मविद्या सफल होती है यह बात कहकर अविद्याया मन्तरे वर्तमाना इस मंत्र से आरम्भ करके तदेतत्सत्यमृषिरंगिराः पुरोवाच इस मंत्र तक द्वैतसा प्रतीति होते भी यह संसार वास्तव अद्वैत है कारण इस में यह है कि संसार द्वैत तो सब किसी को प्रतीत हो ही रहा है तब अद्वैत मंत्रों को कहने का क्या प्रयोजन था इन सब विषयों का हमने भूमिका प्रकण में विशेष रूप से कहा है ॥

अथ माण्डूक्ये आगम प्रकरणम्

" ओं मित्येतदक्षर मिद ॅ सर्वम ॥ १ ॥

अथ माण्डूक्योपनिषदि ओंमित्येतदक्षरमिद ॅ सर्वमित्या· रभ्य " अमात्रश्चतुर्थोंव्यवहार्यः प्रपंचोपशम " एतदन्तेन जाग्रतस्वप्नसुषुप्तय इति अवस्थात्रयं प्रदर्श्य तुरीयावस्थायां पर्य्यवसितं ब्रह्म इति दर्शितम् पादव्यवहारेण च ओंकारस्य चत्वारः पादाः दर्शिताः पृथक् पृथक् अकार उकार मकारेति त्रीन् पादान् प्रदर्श्य ओंकारं संपूर्ण अतिदीर्घ चतुर्मात्रिकं तुरीय-रूपमिति चोक्तः चतुर्थः पादः ओंकारस्याभेदेन ब्रह्मणि तात्पर्यं च

प्रदर्शितम् एतेन सुषुप्तितुरीययोरद्वैतमेव पर्यवसितम् बोध्यमिति चोक्तं एक एवात्मा सुषुप्तौ यथा निष्कलःनिष्प्रपंचः विज्ञानघनः आनन्दमयः सुषुप्तौ तुरीयायां च स एव जाग्रति स्वप्नेऽपि भवितु मर्हति इति स्पष्टमेवोक्तमद्वैतम् ॥

इस मांडूक्योपनिषद् में ब्रह्मवाचक जो ओंकार उससे प्राप्ति होने वाले जो ब्रह्म सो ही विषय है अधिकारी सम्बंध प्रयोजन पूर्ववत् जानना इस ओंकार में चार चरण दिखलाया है अकार, उकार, मकार, चौथा ओंकार अकार, उकार से जाग्रत स्वप्न लेते हैं मकार से सुषुप्ति लेते हैं संपूर्ण ओंकार से तुरीयावस्था लेते हैं इसी को आनन्द घन विज्ञानमय ब्रह्म कहा करते हैं सुषुप्ति और तुरीया में जो स्थायी रूपसे ब्रह्म है वही जाग्रत स्वप्न में भी है किन्तु माया के उपाधि से प्रतीति नहीं होता है जैसे रज्जू अंधकार में सर्परूप में परिणत रहता है अज्ञानियों को इस से यह बात सिद्ध हुआ जीव और ब्रह्म किसी अवस्था में भिन्न नहीं हैं किन्तु ब्रह्म ही जीव है अहंकार से जीव को दुःख प्रतीत होता है ॥

ऐतरेयोपनिषदि प्रथमाध्याये मंत्रः

आत्मा वा इदमेक एव । १

"आत्मावा इदमेक एवाग्र आसीत् नान्यत किंचन मिषत् सईक्षत लोकान्नुसृजा इति । इत्यारभ्य सएतेन प्रज्ञानेनात्मना-स्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गेलोके सर्वान् कामान् आप्त्वा अमृतः समभवत समभवत् इत्याद्यन्तेन मंत्रेण उत्पत्तिस्थितिभङ्ग क्रमेण संसारस्यानित्यत्वं प्रदर्शयता सर्वावस्थासु प्रब्रह्मैवानु-स्यूतमिति आत्मैव ब्रह्मेति स्पष्टं प्रतिपादयति ॥

ऐतरेयोपनिषदमे आत्मा वा इदमेक एवाग्र आसीत् नान्य-त्किंचनमिषत् सईक्षत लोकान्नुसृजा इति यहां से लेकर स एतेन प्रज्ञानेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन" इस मंत्र पर्यंत उत्पत्ति स्थिति भङ्ग क्रमसे संसार की अनित्यता दिखलाते हुए जाग्रत स्वप्नसुषुप्ति तीनों अवस्था में ब्रह्म ही व्याप्त है और नित्य है जीवरूप भी वही है यह बात स्पष्ट बतलाया है

अथ द्वितीयाध्याये मंत्रः ।

" पुरुपेह वा अयमादितोगर्भो भवति ॥ १ ॥

अस्मिन्नध्याये एषवाक्यार्थः जगदुत्पत्तिस्थितिप्रलयकृत असंसारी सर्वज्ञः सर्वशक्तिः सर्वविद् सर्वमिदंजगत स्वतोऽन्य-द्वस्त्वंतरमनुपादायैवाकाशादि क्रमेण सृष्ट्वा स्वात्म प्रबोधनार्थं सर्वाणि च प्राणिमच्छरीराणि स्वयं प्रविवेश प्रविश्य च स्वात्मानं

यथा भूतमिदं ब्रह्मास्मीति साक्षात्प्रत्यवुध्यत तस्मात्स एव सर्वे शरीरेष्वेक एव आत्मा नान्य इति अन्योपि सम आत्मा ब्रह्मास्मीत्येवं विद्यात् इति 'आत्मावा इद मेक एवाग्र आसीत्' 'ब्रह्मततमस्' इति चोक्तम् अन्यत्र च सर्वगतस्य सर्वात्मनः वालाग्रमात्रमप्यप्रविष्टं नास्तीति कथं सीमानं विदार्य प्रापद्यत पिपीलकेव सुषिरम् इत्याद्याक्षेपसमाधानाभ्यां वाक्यार्थो निर्णीतो बोद्धव्यः ॥

तैत्तरीयोपनिषद्भाष्ये शिक्षावल्ली तत्र द्वितीयानुवाके मंत्रः

"शिक्षां व्याख्यास्यामः" ॥ १ ॥

'अथ शिक्षा व्याख्यास्यामः' इत्यारभ्य आनन्दो ब्रह्मेति विजानात् एतदन्तो हि मन्त्रव्यूहः मुमुक्षणां षड्‍ संपत्तिप्रदर्शन पुरः सरमुपक्रमोपसंहाराभ्यां शिक्षया च श्रुतिस्मृतिपुराणोक्त कर्मण सत्वशुद्धौ अधिकारप्राप्तिः उत्तमाधिकारणाञ्च केवलेन ज्ञानेनैव कैवल्यमिति वारम्वारमुद्बोधयाञ्चक्रे अत्र केचित ज्ञानप्राप्तौ केवल ब्रह्मभूतस्य न किंचित्सुखमिति ब्रुवन्ति तन्न-रमणीयम् । अत्रैव परमानन्दप्राप्ति द्वारा परमाह्लादश्रुतेः-तथाहि स एष मानुष आनन्दः इत्यारभ्य चतुर्थ मंत्र पर्यंतं मनुष्यगन्धर्वाद्युत्तरोत्तरभूमिषु अकामहतानां श्रोत्रियाणां प्रत्यक्षो

विभाव्यते शतगुणोत्तरोत्कर्षेण यावद्धिरण्यगर्भस्य ब्रह्मणः आनन्द इति एतेन ते पण्डितं मन्याः समाहिताः वोद्धव्याः शास्त्रप्रामाण्यात् 'शास्त्राणिं यत्र गच्छान्ति तत्र गच्छन्ति मानवाः मानसानि यत्र गच्छान्ति तत्र गच्छन्ति वानराः' 'न तर्केण मति रापनेया' इति श्रुतेश्च ॥

तैत्तरीयोषनिषद् में "अथ शिक्षां व्याख्यास्यामः" इस मंत्र को आरम्भ करके 'आनन्दो ब्रह्मेति व्यजानात्' इस मंत्र पर्यंत सब मंत्रों में मुमुक्षुओं का पद् संपात्ति दिखलाते हुए आरम्भ से समाप्ति पर्यंत यह बात कहा गया श्रुति स्मृति पुराणों में कहे हुए कर्मों से सत्वशुद्धि होती है सत्व शुद्धि होने से जीव उत्तमाधिकारी होता है कर्मफल की चाहना न करते हुए केवल ज्ञान से ही मुक्त हो जाता है यानी ज्ञानियों को कर्म न करने का पाप नहीं लगता केवल ज्ञान से ही मुक्त होता है अगर लोक के दिखलाने के लिये शुभ कर्म करे तौ भी कोई हानि नहीं होती है जैसे रामकृष्णादि और जनक वामदेवादि यह बात स्पष्ट दिखलाया है तैत्तरीयोपनिषद् में इसमें नई रोशनी वाले कोई आचार्य शंका करते हैं जब केवल ब्रह्म होगया तो इसको सुख क्या हुआ यह प्रश्न सुन्दर नहीं है क्योंकि इसी उपनिपद में यह बात कहा है मनुष्य का

जो कुछ आनन्द है याने सुख है उससे शतगुण गन्धर्व को है इसी प्रकार से उत्तरोत्तर ब्रह्मा पर्यंत जो आनन्द है उसके शतगुण ब्रह्मज्ञानी को आनन्द होता है इससे उनके शंका का समाधान होगया ब्रह्मज्ञानी के आनन्द के बराबर किसी को सुख नहीं होता है इसमें शास्त्र ही प्रमाण है जो शास्त्र कहता है वही मनुष्य को मानना चाहिये जो मन कहता है उसके करने वाले तो अज्ञानी हैं इसमें श्रुति प्रमाण है अपने कुतर्क से शास्त्र को नहीं हटाना चाहिये सब किसी के मत में शास्त्र और आचार्य को मानते हैं।

छान्दोग्योपनिषदि

"ॐ मित्येतदक्षरमुद्गीथमित्युपासीत"—

"ओ मिति ह्युद्गायति तस्योपव्याख्यानम्" इत्यारभ्योदशरावे आत्मानमवेक्षेत्येतदन्तेन मध्ये तु स आत्मा तत्वमसि श्वेतकेतो इत्यादयो मंत्राः वद्धाख्यायिकाभिर्भृशं चाद्वैतं निरञ्जनममकाय मव्रणं सैन्धवघनं विज्ञानघनं सच्चिदानन्दजीवमेववस्थात्रये प्रत्यापयन्ति ॥

अब यह छान्दोग्य में ॐ अक्षर उद्गीथ है। जिस वास्ते उच्चैः स्वर से गाया जाता है यही ॐकार ब्रह्म है इस मंत्र से

लेकर ब्रह्मा विरोचन के संवाद पर्यंत मंत्रों से और बीचमें श्वेत केतु के संवाद से अद्वैत ब्रह्म को कहा है जैसे कि श्वेतकेतु के पिता श्वेत केतु से कहते हैं कि "स आत्मा तत्वमसि श्वेत केतो" वह आत्मा तुम ही हो श्वेतकेतु। इस प्रकार नौ वार कहा है कि तुम ही ब्रह्म हो ब्रह्मा ने विरोचन और इन्द्र को कहा है कि पानी के सकोरे में अपने रूप को आप देखो तब आप लोगों को ब्रह्म बतलावें ब्रह्मा का कहने का सारांश यह है कि प्रतिबिम्ब जल उपाधि से है वैसे ही तुम्हारा आत्मा माया उपाधि छूटने से ब्रह्म है इससे स्पष्ट हुआ कि अद्वैत एकही ब्रह्म है नई रोशनी वाले कोई आचार्य कहते हैं वेद संसार ही को कहता है यानी उपनिषद् भी द्वैत को ही बतलाता है यह बात ठीक नहीं है क्यों कर कि द्वैत तो सब किसी को दीख रहा है इसी को उपनिषद् क्यों कहेगा इस बात को भूमिका प्रकरण में हम वारम्वार लिख चुके हैं।

वृहदारण्योपनिषदि प्रथमाध्याये द्वितीयब्राह्मणस्यादिमोऽयं मंत्रः "नैवेह किंचन अग्रआसीत्" इत्यारभ्य 'अहंवृक्षस्यरेरिवा' 'योस्मिन्नुदरमन्तरं कुरुते तस्य भयं भवति' 'अहं ब्रह्मेति अभयं प्राप्तोसि जनक' इति च 'अथाकामयमानो कामो निष्कामः इत्यादिभिः आख्यायिकोपनिवद्धैः मंत्रैः कर्मिणां

गतागतं प्रदर्शयद्भिः । ब्रह्मविदां तु केवलेन ज्ञानेनैव कैवल्यमिति जीवनमुक्तत्वञ्चाववोधयद्भिः उपक्रमोपसंहाराभ्यामुपनिषच्छब्दस्य स्पष्टार्थं च सूचयद्भिरद्वैतमेव सम्यगुपवर्णितमासीत ॥

ऋग्वेदीये तैत्तरीयोपनिषदि तृतीयाध्याये तृतीयो मन्त्रः 'प्रज्ञानम्ब्रह्मेति' महावाक्यम् यजुर्वेदान्तर्गतवृहदारण्योपनिषदि प्रथमाध्याये चतुर्थब्राह्मणे दशमो मन्त्रः 'ब्रह्म वा इदमग्र आसीत' 'तदात्मानमेवावेदहम्ब्रह्मास्मीति' अग्रे ऋषिर्वामदेवोवेदहम्ब्रह्मास्मीति महावाक्यम् सामवेदीयछान्दोग्योपनिषदि षष्ठाध्याये षष्ठप्रपाठकेश्वेतकेतूपाख्याने स आत्मा तत्वमसि श्वेतकेतो महावाक्यम् आथर्वणवेदीयमाण्डूक्योपनिषादि द्वितीयोमन्त्रः स ॐ ह्येतद्ब्रह्मायमात्मा ब्रह्मेति वाक्यम् इति महावाक्य चतुष्टय मुपष्टकमवष्टभ्यैव प्रवृत्तानांश्रुतिस्मृतिपुराणेतिहासानां सर्वधर्मप्रकाशकानामसंदिग्धानांमायात उद्यतस्त्रिजगतोः वर्णयतां केवलंब्रह्मण्येव पर्यवसितानां मायावादः प्रत्यक् सिद्धः इति

वृहदारण्योपनिषद् में प्रथमाध्याय के द्वितीय ब्राह्मण का पहिला मंत्र यह है 'नैवेहकिंचनाग्रासीत्' मतलब इसका यह है कि पहिले यह संसार नथा इस मंत्र से आरम्भ करके 'अथाकामयमानः' इस मंत्र तक केवल अद्वैत में संपूर्ण वृहदारण्य का तात्पर्य है जैसे कि 'अहं वृक्षस्य रेरिवा' इस

मंत्र का यह मतलब है मैं ही संसार का चलाने वाला हूं 'योऽस्मिन्नुदरमन्तरं' इस मंत्र का यह अर्थ है जो ब्रह्म से अपने को भेद मानता है उसी को भय होता है वामदेव ऋषिने कहा है मैं ही ब्रह्म हूं 'अहं ब्रह्मास्मि' इस मंत्र का अर्थ है ज्ञान होने पर जनक से याज्ञवल्क्य ने कहा है 'अभयं प्राप्तोसि जनक' तुमने अभय प्राप्त कर लिया "अथाकामयमानः" इस मंत्र से पहिले कर्म काण्डियों के कर्म के कामना होने से स्वर्गादि प्राप्ति और मर्त्यलोक में आना यह कह कर अकाम-नावाले को जीवन मुक्तत्व वर्णन किया इसी प्रकार चारों वेद के चार महावाक्य इस प्रकार हैं ऋक्‌शाखान्तर्गत एतरेयोप-निषद में 'प्रज्ञानं ब्रह्म' यह महावाक्य है इस का अर्थ है कि चैतन्य ब्रह्म है यजुः शाखान्तर्गत बृहदराण्योपनिषद् में 'अहं-ब्रह्मास्मि' यह महावाक्य है वामदेव ऋषिने ब्रह्मज्ञानी होकर कहा है कि मैं ही ब्रह्म हूं आथर्वणोपनिषद् में 'अयमात्मा ब्रह्म' कहा है इस प्रकार गन्धमात्र भी उपनिषदों का द्वैत में तात्पर्य नहीं है इति विदांकुर्वन्तु विद्वांसः ॥

काचिद्विद्याटवीनां श्रुतिशतविलसद्वाटिकामध्यभागे
भक्तिंव्यासक्तकल्पद्रुममणिविहसद्दीपिका सच्छ्रुतीनाम् ॥

तत्वं हुंकारभाजामपनयसि यदामानमन्तर्निलातुं
संप्राप्योच्चैर्मदीयेत्यपनय हृदयेमानमन्तः सतीनाम् ॥
वुद्धौ चित्प्रतिविम्बो यो जीवोणुस्संसरन्निव ।
महान्तं विभुमात्मानं मत्वासौ नैव शोकभाक् ॥ १ ॥

अथ विषयविशालदावानलवलयसंकलितान्तरात्मानो नेक जन्म दुर्व्वासनाललदुच्छिखावलिकवलिताशेषशेवधयोहम्ममेति विरुद्धाध्यसनतादात्म्यस्फुलिंगावपतनग्रस्त समस्तानंदसंदोहाम्बररुचयो मित्रामित्र पुत्र कलत्रधनधामयवनव्यापार समिद्ध्वलनाति तप्तसमस्तान्तरा रामाः चित्कारैर्दिशोभि पूरयन्तोभि प्लुत्योत्प्लुत्य यदा गन्तुमशक्ताः दुर्वार दावाभिपतनव्यग्र जाग्रत्प्रभावाः हाहाकारैः स्वान्तनुमपिराक्षितुमशक्ताः कुतोहि पुत्र कलत्रवन्धुवर्गान् तथापि शलभा इव विषयोन्मुखा मर्कटा इव प्रतिक्षणं नर्तनमारभमाणाः अनाद्य निर्वाच्या विद्योपस्थापित विषयमेवानुभवन्तस्संसरन्ति तस्यैव प्रहाणाय सर्वेवेदान्ताः समारब्धाः सन्ति यद्यपि चाद्वैतवीथी पथिकैः प्राचीनावाचीनैः प्राचीनावाचीनेषु स्व स्व निवन्धेषु परमपुरुषार्थनिरूपणपन्थाः प्रतिष्ठापितः तमेवावलम्ब्य यियासवोपि प्राचीनावाचीनाः कृतकृत्याः वभूवुः तथापि मञ्जुपञ्जरशुकसरस्वतीति न्यायतः निश्श्रेयसश्रुतिवीथीमप्रदर्शिका संक्षिप्ता चेति पेशलदेशोक्ति

तिलका च श्रुतिसरस्वती कुतूहलाक्रान्तानां सुकुमारशेमुपीणां क्षितिपाकशासनानां सेव्येति प्रयत्नतः दशोपनिषद् मंत्रभाष्याणां रहस्यार्थः संक्षिप्तस्समुपवर्णितः । भूमिका प्रकरणे यास्सिद्धान्तः समुपवर्णितः । तस्यैव प्रमाणीकरणाय ईषादिदशोपनिषदां संक्षिप्ताः मंत्राः समुपवर्णिताः सभाष्याः येषामुपक्रमोपसंहाराभ्यां सूचना च समुपवर्णितैव तत्र तत्र ॥

पहिले ग्रन्थों में सब आचार्यों ने भक्तिमार्ग और मोक्ष मार्ग बड़े २ प्रयत्न और और बड़े २ प्रबन्धों को लिखा हैं उन्हीं सब का सारांश थोड़े ही में तोते के अच्छे पिंजड़े में बैठे हुए तोते की बातों के सुनने की इच्छा से प्रवृत्त होनेवाले को रामकृष्णादि शब्द जैसे भक्ति और मोक्ष के देने वाले हो जाते हैं वैसे ही थोडे वेदों का तात्पर्य है इसको खेलते हुए भी राजा लोग के सेवन करने से मोक्षमार्ग में अवश्य प्रवृत्त होगी इस वास्ते हमने इस प्रबन्ध को लिखा है ॥

॥ इति ॥

# वेदान्तसिद्धान्तमतमार्तण्डेश्रीमद्भगवद्गीता

## विषयानुक्रमणिका ।

| विषयाः | पृष्ठांकाः |
|---|---|

इति श्रीमद्भागवद्गीता विषयानुक्रमणिका

अथ वेदान्त सिद्धान्त मतमार्तण्डे

सिद्धान्तपादस्य श्रीमद्भगवद्गीतार्थविवेचना प्रकरणम्,

# * श्रीमद्भगवद्गीता द्वितीयाध्याये *

भाष्यम् ।

संजय उवाच—

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः
न योत्स्य इति गोविन्द मुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥
तमुवाच हृषीकेशः प्रहसन्निव भारत
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

अत्र 'दृष्ट्वा तु पाण्डवानीक, मित्यारभ्य यावत 'न योत्स्य इति गोविन्द मुक्त्वा तूष्णीं बभूव ह इत्येतदन्तः प्राणिनां शोकमोहादिसंसारबीजभूतदोषोद्भवकारणप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थः । तथाहि—अर्जुनेन राज्यगुरुपुत्रमित्रसुहृत्स्वजनसम्बन्धिबान्धवेषु 'अहमेतेषाम्' ममैते, इत्येवं प्रत्ययनिमित्तस्नेह विच्छेदादिनिमित्तौ आत्मनः शोकमोहौ प्रदर्शितौ 'कथंभीष्ममहं

संख्ये, इत्यादिना । शोकमोहाभ्यां ह्यभिभूतविवेकविज्ञानः स्वतएव क्षत्रधर्मेयुद्धे प्रवृत्तोपि तस्माद्युद्धादुपरराम, परधर्मं च भिक्षाजीवनादिकं कर्तुं प्रववृते । तथा च सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसां स्वभावत एव स्वधर्मपरित्यागः प्रतिषिद्धसेवा च स्यात् । स्वधर्मे प्रवृत्तानामपि तेषां वाङ्मनःकायादीनां प्रवृत्तिः फलाभिसन्धिपूर्विकैव साहंकारा च भवति। तत्रैवंसति धर्माधर्मोपचयात् इष्टानिष्टजन्मसुखदुःखादिप्राप्तिलक्षणः संसारः अनुपरतो भवति । इत्यतः संसारबीजभूतौ शोकमोहौ । तयोश्च सर्वकर्म संन्यासपूर्वकादात्मज्ञानात नान्यतो निवृत्तिरिति तदुपदिदिक्षुः सर्वलोकानुग्रहार्थं । अर्जुनं निमित्तीकृत्य आह भगवान्वासुदेवः 'अशोच्यान्' इत्यादि ॥

अत्र केचिदाहुः—सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात कैवल्यं न प्राप्यते एव । किंतर्हि । अग्निहोत्रादिश्रौतस्मार्तकर्मसहितात ज्ञानात् कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थ इति । ज्ञापकं च आहुरस्यार्थस्य—'अथचेत्वमिमं धर्म्यं संग्रामं न करिष्यसि, 'कर्मण्येवाधिकारस्ते, 'कुरुकर्मैव तस्मात्वम् इत्यादि । हिंसादियुक्तत्वात वैदिकं कर्म अधर्माय इतीयमप्याशंका न कार्य्या कथम् । क्षात्रं कर्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्तं क्रूरमपि स्वधर्म्म इति कृत्वा न

अधर्माय तदकरणे च 'ततः स्वधर्म्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि, इति ब्रुवता यावज्जीवादिश्रुतिचोदितानां पश्वादिहिंसालक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवति—इति ॥

तदसत् ज्ञानकर्मनिष्ठयोर्विभागवचनाद्बुद्धिद्वयाश्रययोः,अशोच्यान्' इत्यादिना भगवता यावत् स्वधर्म्ममपि चावेक्ष्य, इत्येतदन्तेन ग्रन्थेन यत्परमार्थात्मतत्वनिरूपणं कृतम्, तत्सांख्यम् तद्विषया बुद्धिः आत्मनो जन्मादिषड्विक्रियाभावादकर्ता आत्मेति प्रकरणार्थनिरूपणात् या जायते सा सांख्यबुद्धिः सा येषां ज्ञानिनामुचिता भवति, ते सांख्याः । एतस्या बुद्धेः जन्मनः प्राक् आत्मनो देहादिव्यतिरिक्तत्वकर्तृत्वभोक्तृत्वाद्यपेक्षो धर्म्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठानलक्षणो योगः तद्विषया बुद्धिः योगबुद्धिः सा येषां कर्मिणामुचिता भवति ते योगिनः । तथा च भगवता विभक्ते द्वे बुद्धी निर्दिष्टे, 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगेत्विमां शृणु इति । तयोश्च सांख्यबुद्ध्याश्रयां ज्ञानयोगेन निष्ठां सांख्यानां विभक्तां वक्ष्यति, 'पुरा वेदात्मना मया प्रोक्ता इति । तथा च योगबुद्ध्याश्रयां कर्मयोगेन निष्ठां विभक्तां वक्ष्यति—'कर्मयोगेन योगिनाम्, इति । एवं सांख्यबुद्धिं योगबुद्धिं चाश्रित्य द्वे निष्ठे विभक्ते भगवतैव उक्ते ज्ञानकर्मणोः

कर्तृत्वाकर्तृत्वैकत्वानेकत्वबुद्ध्याश्रययोःयुगपदेकपुरुषाश्रयत्वासंभवं पश्यता । यथा एताद्विभागवचनम् तथैव दर्शितं शातपथीये ब्राह्मणे—'एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्ति इति सर्वकर्मसंन्यासं विधाय तच्छेषेण, 'किंप्रजया करिष्यामोयेषां नोयमात्मायं लोकः इति। तत्र च प्राक् दारपरिग्रहात् पुरुषः आत्मा प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रयसाधनम् पुत्रम्, द्विप्रकारं च वित्तं मानुषं दैवं च । तत्र मानुषं कर्म्मरूपं पितृलोकप्राप्तिसाधनं विद्यां च दैवं वित्तं देवलोकप्राप्तिसाधनम्-'सोऽकामयत, इति अविद्याकामवत एव सर्वाणि कर्म्माणि श्रौतादीनि दर्शितानि । तेभ्यः 'व्युत्थाय, प्रव्रजन्ति' इति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम् । तदेतद्विभागवचनमनुपपन्नं स्याद्यदि श्रौतकर्मज्ञानयोः समुच्चयोभिप्रेतः स्याद्भगवतः ॥

न च अर्जुनस्य प्रश्न उपपन्नो भवाति 'ज्यायसी चेत्कर्मणस्ते, इत्यादिः । एकपुरुषानुष्ठेयत्वासम्भवं बुद्धिकर्मणोः भगवता पूर्वमनुक्तं कथमर्जुनः अश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेन्मृषैव 'ज्यायसी चेत्कर्मणस्ते मताबुद्धिः' इति ॥

किंच--यदि बुद्धिकर्मणोः सर्वेषां समुच्चय उक्तः स्यात् अर्जुनस्यापि स उक्त एवेति 'यच्छ्रेय एतयो रेकं तन्मे ब्रूहि सुनिश्चितम् इति कथमुभयोरुपदेशे सति अन्तरविषयएव प्रश्नः

स्यात नहि पित्तप्रशमनार्थिनः वैद्येन मधुरं शीतलं च भोक्तव्यम् इत्युपदिष्टे तयोरन्यतरत्पित्तप्रशमनकारणं ब्रूहि इति प्रश्नः संभवति ॥

अथ अर्जुनस्य भगवदुक्तवचनार्थविवेकानवधारणनिमित्तः प्रश्नः कल्प्येत तथापि भगवता प्रश्नानुरूपं प्रतिवचनं देयम्–मया बुद्धिकर्मणोः समुच्चय उक्तः, किमर्थमित्थं त्वं भ्रान्तोऽसि–इति न तु पुनः प्रतिवचनमननुरूपं पृष्टादन्यदेव 'द्वे निष्ठे मया पुरा प्रोक्ते' इति वक्तुं युक्तम् ।

नापि स्मार्तेनैव कर्मणा बुद्धेः समुच्चये अभिप्रेते विभाग–वचनादि सर्वमुपपन्नम् किंच क्षत्रियस्य युद्धं स्मार्तं कर्म स्वधर्म इति जानतः 'तत्किं कर्मणि घोरे मां नियोजयसि, इति उपालम्भोऽनुपपन्नः ॥

तस्माद्गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेनवा कर्मणा आत्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः यस्य तु अज्ञानात् रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्वस्य ज्ञानमुत्पन्नं परमार्थतत्वविषयम् 'एकमेवेदं सर्वं ब्रह्म अकर्तृ च इति' तस्य कर्मणि कर्मप्रयोजने च निवृत्तेपि लोकसंग्रहार्थं यत्नपूर्वं यथा प्रवृत्तिः तथैव प्रवृत्तस्य यत्प्रवृत्तिरूपं

दृश्यते न तत्कर्म येन बुद्धेः समुच्चयः स्यात, यथा भगवतो वासुदेवस्य क्षत्रधर्मचेष्टितं न ज्ञानेन समुच्चीयते पुरुषार्थसिद्धये, तद्वत् तत्फलाभिसंध्यहंकाराभावस्य तुल्यत्वाद्विदुषः। तत्वविन्नाहं करोमीति मन्यते न च तत्फलमभिसंधत्ते। यथा च स्वर्गादि-कामार्थिनः अग्निहोत्रादिकर्मलक्षणधर्मानुष्ठानाय आहिताग्नेः काम्ये एव अग्निहोत्रादौ प्रवृत्तस्य सामि कृते विनष्टेऽपि कामे तदेव अग्निहोत्राद्यनुतिष्ठतोपि न तत्काम्यमग्निहोत्रादि भवति तथा च दर्शयति भगवान्–' कुर्व्वन्नपिनलिप्यते, न–करोति न लिप्यते ' इति तत्र तत्र ॥

यच्च ' पूर्वै पूर्वतरं कृतम्, कर्मणैव हि संसिद्धिमास्थिता जनकादयः, इति तत्तु प्रविभज्य विज्ञेयम्। तत्कथम् यदि तावत पूर्वे जनकादय तत्वविदोपि प्रवृत्तकर्माणः स्युः, ते लोकसंग्रहा-र्थम्, 'गुणा गुणेषु वर्तन्ते' इति ज्ञानेनैव संसिद्धिमास्थिताः, कर्मसंन्यासे प्राप्तेपि कर्मणा सहैव संसिद्धिमास्थिता, न कर्मसंन्यासं कृतवन्त इत्यर्थः अथ न ते तत्वविदः ईश्वरसमर्पितेन कर्मणा साधनभूतेन संसिद्धिं सत्वशुद्धिम् ज्ञानोत्पत्तिलक्षणां वा संसिद्धिम आस्थिता जनकादय इति व्याख्येयम्। एतमेवार्थं वक्ष्यति भगवान् 'सत्वशुद्धये कर्म कुर्वन्ति, इति। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः, इत्युक्त्वा सिद्धिं प्राप्तस्य पुनर्ज्ञाननिष्ठां

वक्ष्यति—' सिद्धिंप्राप्तो यथा ब्रह्म ' इत्यादिनातस्माद्गीताशास्त्रे केवलादेव तत्वज्ञानान्मोक्षप्राप्तिः न कर्मसमुच्चितात्, इतिनिश्चितोऽर्थः यथा चायमर्थः तथा प्रकरणशो विभज्य तत्र तत्र दर्शयिष्यामः ॥

तत्रैवं धर्मसंमूढ़चेतसो मिथ्याज्ञानवतो महति शोकसागरे निमग्नस्य अर्जुनस्य अन्यत्रात्मज्ञानादुद्धरणमपश्यन् भगवान्वासुदेवः ततः कृपया अर्जुनमुद्दिधारयिषुः आत्मज्ञानायावतारयन्नाह—

श्रीभगवानुवाच

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

अशोच्यान् इत्यादि । न शोच्या अशोच्याः भीष्मद्रोणादयः सद्वृत्तत्वात् परमार्थस्वरूपेण च नित्यत्वात् तान् अशोच्यान् अन्वशोच्यः अनुशोचितवानसि ते म्रियन्ते मन्निमित्तम् अहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिना इति । त्वं प्रज्ञावादान् प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे । तदेतत् मौढ्यं पाण्डित्यं च विरुद्धम् आत्मनि दर्शयसि उन्मत्त इव इत्यभिप्रायः । यस्मात् गतासून् गतप्राणान् मृतान् अगतासून्

अगतप्राणान् जीवतश्च न अनुशोचन्ति पण्डिताः आत्मज्ञाः । पण्डा आत्मविषया बुद्धि र्येषां ते हि पण्डिताः पाण्डित्यं निर्विद्य इति श्रुतेः । परमार्थतस्तुतान् नित्यान् अशोच्यान् अनुशोचसि अतो मूढोऽसि इत्यभि प्रायः ॥ कुतस्ते अशोच्याः यतो नित्याः । कथम्—

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥

न तु एव जातु कदाचित् अहं नासम् किंतु आसमेव । अतीतेषु देहोत्पत्तिविनाशेषु घटादिषु वियदिव नित्य एव अहमासमित्यभिप्रायः । तथा न त्वं न आसीः किं तु आसीरेव तथा न इमे जनाधिपाः न आसन् किं तु आसन्नेव । तथा न च एव न भविष्यामः किंतु भविष्याम एव सर्वे वयम् अतः अस्मात् देहविनाशात् परम् उत्तरकाले अपि । त्रिष्वपिकालेषु नित्या आत्मस्वरूपेण इत्यर्थः । देहभेदानुवृत्त्या वहुवचनमनात्मभेदाभिप्रायेण ॥ तत्रकथमिव नित्य आत्मेति दृष्टान्त माह—

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्ति र्धीरस्तत्र न मुह्यति ॥ १३ ॥

देह अस्य अस्तीति देही तस्य देहिनो देहवतः आत्मनः

अस्मिन् वर्तमाने देहे यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था यौवनं यूनोभावो मध्यमावस्था जरा वयोहानिः जीर्णावस्था इत्येताः तिस्रःअवस्थाः अन्योन्यविलक्षणाः । तासां प्रथमावस्थानाशे न नाशो द्वितीयावस्थोपजने न उपजन आत्मनः । किं तर्हि १ अविक्रियस्यैव द्वितीयतृतीयावस्था प्राप्तिः आत्मनोदृष्टा । तथा तद्वदेव देहात् अन्यो देहो देहांतरम् तस्य प्राप्तिःदेहान्तरप्राप्तिः अविक्रियस्यैव आत्मनः इत्यर्थः । धीरो धीमान् तत्र एवं सति न मुह्यति न मोहमापद्यते ॥

यद्यपि आत्मविनाशनिमित्तो मोहो न संभवति नित्य आत्मा इति विजानतः तथापि शीतोष्णसुखदुःखप्राप्तिनिमित्तो मोहो लौकिको दृश्यते सुखवियोगनिमित्तो मोहः दुःखसंयोगनिमित्तश्च शोकः । इत्येतदर्जुनस्य वचनमाशङ्क्य भगवानाह—

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्वभारत ॥ १४ ॥

मात्राः आभिःमीयन्ते शब्दादय इति श्रोत्रादीनि इन्द्रियाणि । मात्राणां स्पर्शाः शब्दादिभिः संयोगाः । ते शीतोष्णसुखदुःखदाः शीतम् उष्णं सुखं दुःखं च प्रयच्छन्तीति । अथवा स्पृश्यन्त इति स्पर्शाः विषयाः शब्दादयः । मात्राश्च स्पर्शाश्च शीतोष्ण

सुखदुःखदाः। शीतं कदाचित् सुखं कदाचित् दुःखम् तथा उष्ण-मपि अनियतस्वरूपम् । सुखदुःखे पुनः नियतरूपे यतो न व्यभिचरतः। अतः ताभ्यां सुखदुःखाभ्याम् पृथक् शीतोष्णयोः ग्रहणम् । यस्मात् ते मात्रास्पर्शादयः आगमापायिनः आगमापायशीलाः तस्मात् अनित्याः। अतः तान् शीतोष्णादीन् तितिक्षस्व प्रसहस्व। तेषु हर्षं विषादं वा माकार्षीः इत्यर्थः॥ शीतोष्णादीन् सहतः किं स्यादिति शृणु---

यं हि न व्यथयन्त्येते पुरुषं पुरूषर्षभ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

यं हि पुरुषं समे दुःखसुखे यस्य तं समदुःखसुखं सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं न व्यथयन्ति न चालयन्ति नित्यात्मदर्शनात् एते यथोक्ताः शीतोष्णादयः सः नित्यात्मस्वरूपदर्शननिष्ठो द्वन्द्वसहिष्णुः अमृतत्वाय अमृतभावाय मोक्षायेत्यर्थः कल्पते समर्थो भवति ॥ इतश्च शोकमोहौ अकृत्वा शीतोष्णादि सहनं युक्तम् यस्मात्—

नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥

न असतः अविद्यमानस्य शीतोष्णादेः सकारणस्य न विद्यते नास्ति भावो भवनम् अस्तिता ॥

नहि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तुसद्भवति। विकारो हि सः विकारश्च व्यभिचरति। यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत् तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसन्। जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं च अनुपलब्धेः। कार्यस्य घटादेः मृदादिकारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वम् ॥

तदसत्वे सर्वाभावप्रसङ्ग इति चेत् न सर्वत्र बुद्धिद्वयोपलब्धेः सद्बुद्धिरसद्बुद्धिरिति। यद्विषया बुद्धि र्न व्यभिचरति तत् सत, यद्विषया व्यभिचरति, तदसत इति सदसद्विभागे बुद्धितन्त्रे स्थिते, सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणे न नीलोत्पलवत्, सन् घटः, सन् पटः, सन् हस्ती इति। एवं सर्वत्र। तयोर्बुद्ध्योः घटादि बुद्धिः व्यभिचरति। तथा च दर्शितम्। न तु सद्बुद्धिः। तस्मात् घटादिबुद्धिविषयः असन् व्यभिचारात्, न तु सद्बुद्धिविषयः अव्यभिचारात ॥

घटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरति इति चेन्न पटादावपि सद्बुद्धि दर्शनात्। विशेषणविषयैव सा सद्बुद्धिः ॥

सद्बुद्धिवत् घटबुद्धिरपि घटान्तरे दृश्यत इति चेन्न पटादौ अदर्शनात् ॥

सद्बुद्धिरपि नष्टेघटे न दृश्यत इति चेन्न विशेष्याभावात् । सद्बुद्धिः विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किं विषया स्यात् न तु पुनः सद्बुद्धेः विषयाभावात् ॥

एकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमितिचेन्न, 'इदमुदकम्' इतिमरीच्यादौ अन्यतराभावेपि सामानाधिकरण्यदर्शनात् ।

तस्माद्देहादेः द्वन्द्वस्य च सकारणस्य असतो न विद्यते भाव इति तथा सतश्च आत्मनः अभावः अविद्यमानता न विद्यते सर्वत्र अव्यभिचारात् इति अवोचाम ।

एवं आत्मानात्मनोः सदसतोः उभयोरपि दृष्टः उपलब्धः अन्तो निर्णयः सत सदेव असत असदेवोति तु अनयोः यथोक्तयोः तत्वदर्शिभिः । तदिति सर्वनाम सर्वं च ब्रह्म, तस्य नाम तदिति तद्भावः तत्वम् ब्रह्मणो याथात्म्यम् । तद्द्रष्टुं शीलं येषां ते तत्वदर्शिनः, तैः तत्वदर्शिभिः । त्वमपि तत्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहञ्च हित्वा शीतोष्णादीनि नियतानियत

रूपाणि द्वन्द्वानि, 'विकारोयमसन्नेव मरीचिजलवन्मिथ्यावभासते, इति मनसि निश्चित्य तितिक्षस्व इत्यभिप्रायः' ।

किं पुनस्तत् यत् सदेव सर्वदा इति, उच्यते—

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥

अविनाशि न विनष्टुं शीलं यस्येति । तु शब्दः असतो विशेषणार्थः । तत विद्धि विजानीहि । किम येन सर्वमिदं जगत ततं व्याप्तं सदाख्येन ब्रह्मणा साकाशम् । आकाशेनेव घटादयः विनाशं अदर्शनम् अभावम् । अव्ययस्य न व्येति उपचयापचयौ न याति इति अव्ययं तस्य अव्ययस्य । नैतत सदाख्यं ब्रह्म स्वेन रूपेण व्येति व्यभिचरति, निरवयवत्वात देहादिवत । नाप्यात्मीयेन आत्मीयाभावात यथा देवदत्तो धनहान्या व्येति, न तु एवं ब्रह्म व्येति अतः अव्ययस्य अस्य ब्रह्मणः विनाशं न कश्चित् कर्तुमर्हति न कश्चित आत्मानं विनाशयितुं शक्नोति ईश्वरोपि आत्मा हि ब्रह्म, स्वात्मनि च क्रियाविरोधात ।

किं पुनस्तदसत यत्स्वात्मसत्तां व्यभिचरतीति उच्यते—

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनो ऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥

अन्तः विनाशः विद्यते येषां ते अन्तवन्तः । यथा मृगतृष्णिकादौ सद्बुद्धिः अनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते स तस्य अन्तः, तथा इमे देहाः स्वप्नमायादेहादिवच्च अन्तवन्तः नित्यस्य शरीरिणः शरीरवतः अनाशिनः अप्रमेयस्य आत्मनः अन्तवन्त इति उक्ताः विवेकिभिरित्यर्थः । 'नित्यस्य, 'अनाशिनः, इति न पुनरुक्तम्, नित्यत्वस्य द्विविधत्वात् लोके, नाशस्यच । यथा देहो भस्मीभूतः अदर्शनं गतो नष्ट उच्यते । विद्यमानोपि यथा अन्यथा परिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते । तत्र नित्यस्य, 'अनाशिन, इति द्विविधेनापि नाशेन असम्बन्धः अस्येत्यर्थः । अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यात् आत्मनः तन्माभूदिति । 'नित्यस्य, 'अनाशिनः, इत्याह, अप्रमेयस्य न प्रमेयस्य प्रत्यक्षादिप्रमाणैः अपरिच्छेद्यस्येत्यर्थः ॥

ननु आगमेन आत्मा परिच्छिद्यते, प्रत्यक्षादिना च पूर्वम् न आत्मनः स्वतः सिद्धत्वात् । सिद्धेहि आत्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति । नहि पूर्वम् इत्थमहम् इति आत्मानमप्रमाय पश्चात प्रमेयपरिच्छेदाय प्रवर्तते नहि आत्मा नाम कस्यचित् अप्रसिद्धो भवति । शास्त्रं तु अन्त्यं प्रमाणम् अतद्धर्माध्यारोपणमात्रानिवर्तकत्वेन प्रमाणत्वम् आत्मनः प्रतिपद्यते,

न तु अज्ञातार्थज्ञापकत्वेन तथा च श्रुतिः—'यत्साक्षादपरोक्षाद्ब्रह्म-य आत्मा सर्वान्तरः' इति ॥

यस्मादेवं नित्यः अविक्रियश्च आत्मा तस्मात् युध्यस्व युद्धात् उपरमं मा कार्षीः इत्यर्थः ॥

नहि अत्र युद्धकर्तव्यता विधीयते युद्धे प्रवृत्त एवहि असौ शोकमोहप्रतिवद्धः तूष्णीमास्ते अतः तस्य प्रतिबन्धापनयनमात्रं भगवता क्रियते । तस्मात् 'युध्यस्व' इति अनुवादमात्रम् न विधिः ॥

शोकमोहादिसंसारकारणनिवृत्यर्थं गीताशास्त्रम्, न प्रवर्तकम् इत्येतस्यार्थस्य साक्षिभूते ऋचौ आनिनाय भगवान् । यत्तुमन्यसे युद्धे भीष्मादयो मया हन्यन्ते, अहमेव तेषां हन्ता इति एषा बुद्धिः मृषैव ते । कथम्

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्
उभौ तौ न विजानीतो नायं हन्ति न हन्यते । १९ ।

य एनं प्रकृतं देहिनं वेत्ति विजानाति हन्तारं हननाक्रियायाः कर्तारं यश्च एनम् अन्यो मन्यते हतं देहहननेन हतः अहम्,

इति हननक्रियायाः कर्मभूतम्, तौ उभौ न विजानीतः न ज्ञात वन्तौ अविवेकेन आत्मानम् ।'हन्ता अहम्' हतः अस्मि अहम्, इति देहहननेन आत्मानमहं प्रत्ययविषयं यौ विजानीतः तौ आत्मस्वरूपानभिज्ञौ इत्यर्थः । यस्मात् न अयम् आत्मा हन्ति न हननक्रियायाः कर्ता भवति न च हन्यते न च कर्मभवतीत्यर्थः अविक्रियत्वात् ॥

कथमविक्रय आत्मेति द्वितीयो मन्त्रः ॥

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः
अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे।२०।

न जायते न उत्पद्यते जनिलक्षणा वस्तुविक्रिया न आत्मनो विद्यते इत्यर्थः । तथा न म्रियते वा । वा शब्दः चार्थे । न म्रियते च इति अन्त्या विनाशलक्षणा विक्रिया प्रतिषिध्यते। कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधैः संवध्यते —न कदाचित् जायते न कदाचित् म्रियते इत्येवम् । यस्मात् अयम् आत्मा भूत्वा भवनक्रियामनुभूय पश्चात्अभविता अभावं गन्ता न भूयः पुनः तस्मात् न म्रियते । योहि भूत्वा न भविता स म्रियत इत्युच्यते लोके । वा शब्दात् न शब्दाश्च अयमात्मा अभूत्वा वा भविता देहवत् न भूयः । तस्मात् न जायते । यो हि

अभूत्वा भविता स जायत इत्युच्यते। नैवमात्मा। अतो न जायते यस्मादेवं तस्मात् अजः यस्मात् न म्रियते तस्मात् नित्यश्च। यद्यपि आद्यन्तयोर्विक्रिययोः प्रतिषेधे सर्वा विक्रियाः प्रतिषिद्धा भवन्ति तथापि मध्यभाविनीनां विक्रियाणां स्वशब्दैरेव प्रतिषेधः कर्तव्यः अनुक्तानामपि यौवनादिसमस्तविक्रियाणां प्रतिषेधो यथा स्यात् इत्याह—शाश्वत इत्यादिना। शाश्वत इति अपक्षयलक्षणा विक्रिया प्रतिषिध्यते। शश्वद्भवः शाश्वतः। न अपक्षीयते स्वरूपेण निरवयवत्वात्। नापि गुणक्षयेण अपक्षयः निर्गुणत्वात्। अपक्षयविपरीतापि वृद्धिलक्षणा विक्रियाप्रतिषिध्यते—पुराणइति। यो हि अवयवागमेन उपचीयते स वर्धते अभिनव इति चउच्यते। अयं तु आत्मा निरवयवत्वात पुरापि नव एवेति पुराणः न वर्धते इत्यर्थः। तथा न हन्यते। हन्ति अत्र विपरिणामार्थे द्रष्टव्यः अपुनरुक्ततायै। न विपरिणम्यते इत्यर्थः। हन्यमाने विपरिणम्यमानेऽपि शरीरे। अस्मिन् मन्त्रे षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते। सर्वप्रकारविक्रियारहित आत्मा इति वाक्यार्थः। यस्मादेवं तस्मात् 'उभौ तौ न विजानीतः, इति पूर्वेण मन्त्रेण अस्य संवन्धः॥

'य एनं वेत्ति हन्तारम्' इत्यनेन मन्त्रेण हननक्रियायाः कर्ता

कर्म च न भवति' इति प्रतिज्ञाय 'न जायते' इत्यनेन अविक्रियत्वं हेतुमुक्त्वा प्रतिज्ञातार्थमुपसंहरति—

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥

वेद विजानाति अविनाशिनम् अन्त्यभावविकाररहितं नित्यं विपरिणामरहितं यो वेद इति संबन्धः । एनं पूर्वेण मन्त्रेणोक्तलक्षणम् अजं जन्मरहितम् अव्ययम् अपक्षयरहितं कथं केन प्रकारेण सः विद्वान् पुरुषः अधिकृतः हन्ति हननक्रियां करोति । कथं वा घातयति हन्तारं प्रयोजयति । न कथंचित् कंचित् हन्ति न कथंचित् कंचित् घातयति इति उभयत्र आक्षेपएवार्थः प्रश्नार्थासंभवात् । हेत्वर्थस्य च अविक्रियत्वस्य तुल्यत्वात् विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थः अभिप्रेतो भगवता । हन्तेस्तु आक्षेपःउदाहरणार्थत्वेन कथितः॥

विदुषः कं कर्मासंभवहेतुविशेषं पश्यन् कर्माण्याक्षिपति भगवान् 'कथं स पुरुषः' इति । ननु उक्त एवात्मनः अविक्रियत्वं सर्वकर्मासंभवकारणविशेषः । सत्यमुक्तः । न तु सः कारणविशेषः अन्यत्वात् विदुषः अविक्रियादात्मनः । न हि अविक्रियं स्थाणुं विदितवतः कर्म न संभवति इति चेत् न विदुषः आत्मत्वात् ।

न देहादिसंघातस्य विद्वत्ता । अतः पारिशेष्यात् असंहतः आत्मा विद्वान् अविक्रियः इति तस्य विदुषः कर्मासंभवात् आक्षेपो युक्तः कथंस पुरुषः इति । यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्य अविक्रिय एव सन् बुद्धिवृत्यविवेकविज्ञानेन अविद्यया उपलब्धा आत्मा कल्प्यते एवमेव आत्मानात्मविवेकज्ञानेन बुद्धिवृत्त्या विद्यया असत्यरूपयैव परमार्थतः अविक्रिय एव आत्मा विद्वानुच्यते । विदुषः कर्मासंभववचनात् यानि कर्माणि शास्त्रेण विधीयन्ते तानि अविदुषो विहितानि इति भगवतो निश्चयोऽवगम्यते ॥

ननु विद्यापि अविदुष एव विधीयते विदितविद्यस्य पिष्टपेषणवत् विद्याविधानानर्थक्यात् । तत्र अविदुषः कर्माणि विधीयन्ते न विदुषः इति विशेषो नोपपद्यते इति चेत् न अनुष्ठेयस्य भावाभावविशेषोपपत्तेः । अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालम् । अग्निहोत्रादिकर्म अनेकसाधनोपसंहारपूर्वकमनुष्ठेयम् 'कर्ताअहम्' 'ममकर्तव्यम्' इत्येवं प्रकारविज्ञानवतः अविदुषःयथा अनुष्ठेयं भवति न तु तथा 'न जायते' इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकालभावि किंचिदनुष्ठेयं भवति किं तु नाहं कर्ता नाहं भोक्ता इत्याद्यात्मैकत्वाकर्तृत्वादिविषयज्ञानात् नान्यदुत्पद्यते इति एष विशेष उपपद्यते । यः पुनः 'कर्ता अहम्' इति वोत्ति आत्मानम् तस्य 'मम इदं कर्तव्यम्' इति अवश्यं भाविनी बुद्धिः

स्यात् तदपेक्षया सः अधिक्रियते इति तं प्रतिकर्माणि संभवन्ति स च अविद्वान् 'उभौ तौ, न विजानीतः इति वचनात् विशेषितस्य च विदुषः कर्माक्षेपवचनाच्च 'कथं स पुरुषः' इति। तस्मात् विशेषितस्य अविक्रियात्मदर्शिनः विदुषः मुमुक्षोश्च सर्वकर्मसंन्यासे एव अधिकारः अत एव भगवान् नारायणः सांख्यान् विदुषः अविदुषश्च कार्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति । तथा च पुत्राय आह भगवान् व्यासः 'द्वाविमावथपन्थानौ इत्यादि। तथा च क्रियापथश्चैव पुरस्तात् पश्चात्संन्यासश्चेति । एतमेव-विभागं पुनः पुनर्दर्शयिष्यति भगवान्–अतत्त्ववित् अहंकार-विमूढात्मा कर्ताहमिति मन्यते' तत्वविच्चु नाहं करोमि इति। तथा च 'सर्वकर्माणि मनसा संन्यस्यास्ते इत्यादि ।

तत्र केचित्पण्डितंमन्या वदन्ति–'जन्मादिषडभावविक्रिया रहितः अविक्रियः अकर्ता एकः अहमात्मा इति न कस्यचित् ज्ञानम् उत्पद्यते यस्मिन् सति सर्वकर्मसंन्यासः उपदिश्यते इति। तन्न 'न जायते इत्यादिशास्त्रोपदेशानर्थक्यप्रसङ्गात। यथा च शास्त्रोपदेशसामर्थ्यात् धर्माधर्मास्तित्वविज्ञानं कर्तुश्च देहान्तर-संबंधविज्ञानमुत्पद्यते तथा शास्त्रात् तस्यैव आत्मनः अविक्रियत्वाकर्तृत्वैकत्वादिविज्ञानं कस्मात् नोत्पद्यते इति

प्रष्टव्याः ते। करणागोचरत्वात् इति चेत् न 'मनसैवानुद्रष्टव्यम्' इति श्रुतेः शास्त्राचार्योपदेशशमदमादिसंस्कृतं मनः आत्म-दर्शने करणम् तथा च तदधिगमाय अनुमाने आगमे च सति ज्ञानं नोत्पद्यत इति साहसमात्रमेतत्। ज्ञानं च उत्पद्यमानं तद्विपरीतमज्ञानम् अवश्यं बाधते इत्यभ्युपगन्तव्यम्। तच्च-अज्ञानं दर्शितम् 'हन्ता अहम्, हतः अस्मि, इति उभौ तौ न विजानीत, इति। अत्र च आत्मनः हननक्रियायाः कर्तृत्वं कर्मत्वम् हेतुकर्तृत्वं च अज्ञानकृतंदर्शितम्। तच्च सर्व क्रियास्वपि समानं कर्तृत्वादेः अविद्याकृतत्वम्। अविक्रिय-त्वात् आत्मनः। विक्रियावान् हि कर्ता आत्मनः कर्मभूत-मन्यं प्रयोजयति 'कुरू, इति। तदेतत् अविशेषेण विदुषः सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान्वासुदेवः विदुषः कर्माधिकाराभावप्रदर्शनार्थम् 'वेदा विनाशिनं....कथं स पुरुषः' इत्यादिना। क्पुनः विदुषः अधिकार इति एतदुक्तं पूर्वमेव ज्ञानयोगेन सांख्यानाम् इति। तथा च सर्वकर्मसंन्यासं वक्ष्यति 'सर्वे कर्माणि मनसा' इत्यादिना॥

ननु मनसा इति वचनात् न वाचिकानां कायिकानां च संन्यासः इति चेत् न सर्वकर्माणि इति विशेषितत्वात्। मानसानामेव सर्वकर्मणामिति चेत् न मनोव्यापार

पूर्वकत्वाद्वाक्कायव्यापाराणां मनोव्यापाराभावे तदनुपपत्तेः । शास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानिकर्माणि वर्जयित्वा अन्यानि सर्वकर्माणि मनसा संन्यस्येदिति चेत् न 'नैव कुर्वन्नकारयन्' इति, विशेषणात् । सर्वकर्मसंन्यासः अयं भगवता उक्तः मरिष्यतः न जीवतः इति चेत् न 'नवद्वारे पुरे देही आस्ते, इति विशेषणानुपपत्तेः । न हि सर्वकर्मसंन्यासेन मृतस्य तद्देहे आसनं संभवति । अकुर्वतः अकारयतश्च देहे संन्यस्य इति संबन्धः न देहे आस्ते इति चेत् न सर्वत्र आत्मनः अविक्रियत्वावधारणात् आसनाक्रियायाश्च अधिकरणापेक्षत्वात् तदनपेक्षत्वाच्च संन्यासस्य । संपूर्वस्तु न्यासशब्दः अत्र त्यागार्थः न निक्षेपार्थः । तस्मात् गीताशास्त्रे आत्मज्ञानवतः संन्यास एव अधिकारःन कर्मणि इति तत्र तत्र उपरिष्टात् आत्मज्ञानप्रकरणे दर्शयिष्यामः ॥

प्रकृतं तु वक्ष्यामः । तत्र आत्मनः अविनाशित्वं प्रतिज्ञातम् तत्किमिवेति उच्यते ।

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।<br>न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥

एनं प्रकृतं देहिनं न छिन्दन्ति शस्त्राणि निरवयवत्वात्

